॥ मैत्रायण्युपनिषत् ॥

॥ अथ मैत्रायण्युपनिषत् ॥

सामवेदीय सामान्य उपनिषत् ॥

वैराग्योत्थभक्तियुक्तब्रह्ममात्रप्रबोधतः ।
यत्पदं मुनयो यान्ति तत्त्रैपदमहं महः ॥

ॐ आप्यायन्तु ममाङ्गानि वाक्प्राणश्चक्षुः श्रोतमथो बलमिन्द्रियाणि च ।
सर्वाणि सर्वं ब्रह्मोपनिषदं माहं ब्रह्म निराकुर्यां मा मा ब्रह्म निराकरोदनिराकरणमस्त्वनिराकरणं मेस्तु तदात्मनि निरते य उपनिषत्सु
धर्मास्ते मयि सन्तु ते मयि सन्तु ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

मैत्रायणी कौषितकी बृहज्जाबालतापनी ।
कालाग्निरुद्रमैत्रेयी सुबालक्षुरमन्त्रिका ।
ॐ बृहद्रथो ह वै नाम राजा राज्ये ज्येष्ठं पुत्रं निधापयित्वेदमशाश्वतं मन्यमानः शारीरं वैराग्यमुपेतोऽरण्यं निर्जगाम स तत्र परमं तप आस्थायादित्यमीक्षमाण ऊर्ध्वबाहुस्तिष्ठत्यन्ते सहस्रस्य मुनिरन्तिकमाजगामाग्निरिवाधूमकस्तेजसा निर्दहन्निवात्मविद्भगवाञ्छाकायन्य उत्तिष्ठोत्तिष्ठ वरं वृणीश्वेति राजानमब्रवीत्स तस्मै नमस्कृत्योवाच भगवन्नाहमात्मवित्त्वं तत्त्वविच्छृणुमो वयं स त्वं नो ब्रूहीत्येतद्वृतं पुरस्तादशक्यं मा पृच्छ प्रश्नमैक्ष्वाकान्यान्कामान्वृणीश्वेति शाकायन्यस्य चरणवभिमृश्यमानो राजेमां गाथां जगाद ॥ १॥

भगवन्नस्थिचर्मस्नायुमज्जामांसशुक्रशोणितश्लेष्माश्रुदूषिते विण्मूत्रवातपित्तकफसङ्घाते दुर्गन्धे निःसारेऽस्मिञ्छरीरे किं कामोपभोगैः ॥ २॥

कामक्रोधलोभभयविषादेर्ष्येष्टवियोगानिष्टसम्प्रयोगक्षु

त्पिपासाजरामृत्युरोगशोकाद्यैरभिहतेऽस्मिञ्छरीरे किं
कामोपभोगैः ॥ ३॥

सर्वं चेदं क्षयिष्णु पश्यामो यथेमे
दंशमशकादयस्तृणवन्नश्यतयोद्भूतप्रध्वंसिनः ॥ ४॥

अथ किमेतैर्वा परेऽन्ये महाधनुर्धराश्चक्रवर्तिनः
केचित्सुद्युम्नभूरिद्युम्नेन्द्रद्युम्नकुवलयाश्वयौवनाश्ववद्धिया
श्वाश्वपतिः शशबिन्दुर्हारिश्चन्द्रोऽम्बरीषो
ननूक्तस्वयातिर्ययातिनरण्योक्षसेनोत्थमरुत्तभरतप्रभृतयो
राजानो मिषतो बन्धुवर्गस्य महतीं श्रियं
त्यक्त्वास्माल्लोकादमुं लोकं प्रयान्ति ॥ ५॥

अथ किमेतैर्वा परेऽन्ये
गन्धर्वासुरयक्षराक्षसभूतगणपिशाचोरगग्रहादीनां
निरोधनं पश्यामः ॥ ६॥

अथ किमेतैर्वान्यानां शोषणं महार्णवानां शिखरिणां
प्रपतनं ध्रुवस्य प्रचलनं स्थानं वा तरूणां
निमज्जनं पृथिव्याः स्थानादपसरणं सुराणं
सोऽहमित्येतद्विधेऽस्मिन्संसारे किं
कामोपभोगैर्यैरेवाश्रितस्यासकृदिहावर्तनं दृश्यत
इत्युद्धर्तुमर्हसीत्यन्धोदपानस्थो भेक इवाहमस्मिन्संसारे
भगवंस्त्वं नो गतिस्त्वं नो गतिः ॥ ७॥ इति प्रथमः
प्रपाठकः ॥

अथ भगवाञ्छाकायन्यः सुप्रीतोऽब्रवीद्राजानं महाराज
बृहद्रथेक्ष्वाकुवंशध्वजशीर्षात्मजः कृतकृत्यस्त्वं
मरुन्नाम्नो विश्रुतोऽसीत्ययं वा व खल्वात्मा ते कतमो
भगवान्वर्ण्य इति तं होवाच इति ॥ १॥

य एषो बाह्यावष्टम्भनेनोर्ध्वमुत्क्रान्तो
व्यथमानोऽव्यथमानस्तमः प्रणुदत्येष आत्मेत्याह
भगवानथ य एष सम्प्रसादोऽस्माञ्छरीरात्समुत्थाय
परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मेति
होवाचैतदमृतमभयमेतद्ब्रह्मेति ॥ २॥

अथ खल्वियं ब्रह्मविद्या सर्वोपनिषद्विद्या वा राजन्नस्माकं भगवता मैत्रेयेण व्याख्याताहं ते कथयिष्यामीत्यथापहतपाप्मानस्तिग्मतेजस ऊर्ध्वरेतसो वालखिल्या इति श्रुयन्तेऽथैते प्रजापतिमब्रुवन्भगवञ्शकटमिवाचेतनमिदं शरीरं कस्यैष खल्वीदृशो महिमातीन्द्रियभूतस्य येनैतद्विधमिदं चेतनवत्प्रतिष्ठापितं प्रचोदयितास्य को भगवन्नेतदस्माकं ब्रूहीति तान्होवाच ॥ ३॥

यो ह खलु वाचोपरिस्थः श्रूयते स एव वा एष शुद्धः पूतः शून्यः शान्तो प्राणोऽनीशत्माऽनन्तोऽक्षय्यः स्थिरः शाश्वतोऽजः स्वतन्त्रः स्वे महिम्नि तिष्ठत्यनेनेदं शरीरं चेतनवत्प्रतिष्ठापितं प्रचोदयिता चैषोऽस्येति ते होचुर्भगवन्कथमनेनेदृशेनानिच्छेनैतद्विधमिदं चेतनवत्प्रतिष्ठापितं प्रचोदयिता चैषोऽस्येति कथमिति तान्होवाच ॥ ४॥

स वा एष सूक्ष्मोऽग्राह्योऽदृश्यः पुरुषसंज्ञको बुद्धिपूर्वमिहैवावर्ततेंऽशेन सुषुप्तस्यैव बुद्धिपूर्वं निबोधयत्यथ योह खलु वावाइतस्यांशोऽयं यश्चेतनमात्रः प्रतिपूरुषं क्षेत्रज्ञः सङ्कल्पाध्यवसायाभिमानलिङ्गः प्रजापतिर्विश्वक्षस्तेन चेतनेनेदं शरीरं चेतनवत्प्रतिष्ठापितं प्रचोदयिता चैषोऽस्येति ते होचुर्भगवन्नीदृशस्य कथमंशेन वर्तनमिति तान्होवाच ॥ ५॥

प्रजापतिर्वा एषोऽग्रेऽतिष्ठत्स नारमतैकः स आत्मनमभिध्यायद्बव्हीः प्रजा असृजत्त अस्यैवात्मप्रबुद्धा अप्राणा स्थाणुरिव तिष्ठमाना अपश्यत्स नारमत सोऽमन्यतैतासं प्रतिबोधनायाभ्यन्तरं प्राविशानीत्यथ स वायुमिवात्मानं कृत्वाभ्यन्तरं प्राविशत्स एको नाविशत्स पञ्चधात्मानं प्रविभज्योच्यते यः प्राणोऽपानः समान उदानो व्यान इति ॥ ६॥

अथ योऽयमूर्ध्वमुत्क्रामतीत्येष वाव स प्राणोऽथ योयमावञ्चं संक्रामत्वेष वाव सोऽपानोऽथ योयं स्थविष्ठमन्नधातुमपाने स्थापयत्यणिष्ठं चाङ्गेऽङ्गे

समं नयत्येष वाव स समानोऽथ योऽयं पीताशितमुद्गिरति निगिरतीति चैष वाव स उदानोऽथ येनैताः शिरा अनुव्याप्ता एष वाव स व्यानः ॥ ७॥

अथोपांशुरन्तर्याम्यमिभवत्यन्तर्यामुपांशुमेतयोरन्तराले चौष्ण्यं मासवदौष्ण्यं स पुरुषोऽथ यः पुरुषः सोऽग्निर्वैश्वानरोऽप्यन्यत्राप्युक्तमयमग्निर्वैश्वानरो योऽयमनन्तः पुरुषो येनेदमन्नं पच्यते यदिदमद्यते तस्यैष घोषो भवति यदेतत्कर्णावपिधाय शृणोति स यदोत्क्रमिष्यन्भवति नैनं घोषं शृणोति ॥ ८॥

स वा एष पञ्चधात्मानं प्रविभज्य निहितो गुहायां मनोमयः प्राणशरीरो बहुरूपः सत्यसं कल्प आत्मेति स वा एषोऽस्य हृदन्तरे तिष्ठन्नकृतार्थोऽमन्यतार्थानसानि तत्स्वानीमानि भित्त्वोदितः पञ्चभी रश्मिभिर्विषयानत्तीति बुद्धीन्द्रियाणि यानीमान्येतान्यस्य रश्मयः कर्मेन्द्रियाण्यस्य हया रथः शरीरं मनो नियन्ता प्रकृतिमयोस्य प्रतोदनेन खल्वीरितं परिभ्रमतीदं शरीरं चक्रमिव मृते च नेदं शरीरं चेतनवत्प्रतिष्ठापितं प्रचोदयिता चैषोऽस्येति ॥ ९॥

स वा एष आत्मेत्यदो वशं नीत इव सितासितैः कर्मफलैरभिभूयमान इव प्रतिशरीरेषु चरत्यव्यक्तत्वात्सूक्ष्मत्वाददृश्यत्वादग्राह्यत्वान्निर्ममत्वा च्चानवस्थोऽकर्ता कर्तेवावस्थितः ॥ १०॥

स वा एष शुद्धः स्थिरोऽचलश्चालेपोऽव्यग्रो निःस्पृहः प्रेक्षकवदवस्थितः स्वस्य चरितभुग्गुणमयेन पटेनात्मानमन्तर्धीयावस्थित इत्यवस्थित इति ॥ ११॥ इति द्वितीयः प्रपाठकः ॥

ते होचुर्भगवन्यद्येवमस्यात्मनो महिमानं सूचयसीत्यन्यो वा परः कोऽयमात्मा सितासितैः कर्मफलैरभिभूयमानः सदसद्योनिमापद्यत इत्यवाचीं वोर्ध्वां वा गतं द्वन्द्वैरभिभूयमानः परिभ्रमतीति कतम एष इति तान्होवाच ॥ १॥

अस्ति खल्वन्योऽपरो भूतात्मा योऽयं सितासितैः
कर्मफलैरभिभूयमानः सदसदयोनिमापद्यत इत्यवाचीं
वोर्ध्वां गतिं द्वन्द्वैरभिभूयमानः
परिभ्रमतीत्यस्योपव्याख्यानं पञ्च तन्मात्राणि
भूतशब्देनोच्यन्ते पञ्च महाभूतानि
भूतशब्देनोच्यन्तेऽथ तेषां यः समुदायः
शरीरमित्युक्तमथ यो ह खलु वाव शरीरमित्युक्तं स
भूतात्मेत्युक्तमथास्ति तस्यात्मा बिन्दुरिव पुष्कर इति स वा
एषोऽभिभूतः
प्राकृत्यैर्गुणैरित्यतोऽभिभूतत्वात्संमूढत्वं
प्रयात्यसंमूढस्त्वादात्मस्थं प्रभुं भगवन्तं
कारयितारं नापश्यद्गुणौघैस्तृप्यमानः
कलुषीकृतास्थिरश्चञ्चलो लोलुप्यमानः सस्पृहो
व्यग्रश्चाभिमानत्वं प्रयात इत्यहं सो ममेदमित्येवं
मन्यमानो निबध्नात्यात्मनात्मानं जालेनैव खचरः
कृतस्यानुफलैरभिभूयमानः परिभ्रमतीति ॥ २॥

अथान्यत्राप्युक्तं यः कर्ता सोऽयं वै भूतात्मा करणैः
कारयितान्तःपुरुषोऽथ यथाग्निनायःपिण्डो वाभिभूतः
कर्तृभिर्हन्यमानो नानात्वमुपैत्येवं वाव खल्वसौ
भूतात्मान्तःपुरुषेणाभिभूतो गुणैर्हन्यमानो
नानात्वमुपैत्यथ यत्त्रिगुणं चतुरशीतिलक्षयोनिपरिणतं
भूतत्रिगुणमेतद्वै नानात्वस्य रूपं तानि ह वा इमानि
गुणानि पुरुषेणेरितानि चक्रमिव चक्रिणेत्यथ यथायःपिण्डे
हन्यमाने नाग्निरभिभूयत्येवं नाभिभूयत्यसौ
पुरुषोऽभिभूयत्ययं भूतात्मोपसंश्लिष्टत्वादिति ॥ ३॥

अथान्यत्राप्युक्तं शरीरमिदं मैथुनादेवोद्भूतं
संविदपेतं निरय एव मूत्रद्वारेण
निष्क्रामन्तमस्थिभिश्चितं मांसेनानुलिप्तं
चर्मणावबद्धं विण्मूत्रपित्तकफमज्जामेदोवसाभिरन्यैश्च
मलैर्बहुभिः परिपूर्णं कोश इवावसन्नेति ॥ ४॥

अथान्यत्राप्युक्तं संमोहो भयं विषादो निद्रा तन्द्री व्रणो
जरा शोकः क्षुत्पिपासा कार्पण्यं क्रोधो नास्तिक्यमज्ञानं
मात्सर्यं वैकारुण्यं मूढत्वं निर्व्रीडत्वं
निकृतत्वमुद्धातत्वमसमत्वमिति तामसान्वितस्तृष्णा स्नेहो

रागो लोभो हिंसा रतिर्दृष्टिव्यापृतत्वमीर्ष्या
काममवस्थितत्वं चञ्चलत्वं जिहीर्षार्थोपार्जनं
मित्रानुग्रहणं परिग्रहावलम्बोऽनिष्टेष्विन्द्रियार्थेषु
द्विष्टिरिष्टेश्वभिषङ्ग इति राजसान्वितैः परिपूर्ण
एतैरभिभूत इत्ययं भूतात्मा
तस्मान्नानारूपाण्याप्नोतीत्याप्नोतीति ॥ ५॥ तृतीयः
प्रपाठकः ॥

ते ह खल्वथोर्ध्वरेतसोऽतिविस्मिता अतिसमेत्योचुर्भगवन्नमस्ते
त्वं नः शाधि त्वमस्माकं गतिरन्या न विद्यत इत्यस्य
कोऽतिथिर्भूतात्मनो येनेदं हित्वामन्येव सायुज्यमुपैति
तान्होवाच ॥ १॥

अथान्यत्राप्युक्तं महानदीषूर्मय इव निवर्तकमस्य
यत्पुराकृतं समुद्रवेलेव दुर्निवार्यमस्य मृत्योरागमनं
सदसत्फलमयैर्हि पाशैः पशुरिव बद्धं
बन्धनस्थस्येवास्वातन्त्र्यं यमविषयस्थस्यैव
बहुभयावस्थं मदिरोन्मत्त इवामोदममदिरोन्मत्तं पाप्मना
गृहीत इव भ्राम्यमाणं महोरगदष्ट इव विपद्दृष्टं
महान्धकार इव रागान्धमिन्द्रजालमिव मायामयं स्वप्नमिव
मिथ्यादर्शनं कदलीगर्भ इवासारं नट इव क्षणवेषं
चित्रभित्तिरिव मिथ्यामनोरममित्यथोक्तम् ॥ शब्दस्पर्शादयो
येऽर्था अनर्था इव ते स्थिताः । येष्वासक्तस्तु भूतात्मा न
स्मरेच्च परं पदम् ॥ २॥

अयं वा व खल्वस्य प्रतिविधिर्भूतात्मनो यद्येव
विद्याधिगमस्य धर्मस्यानुचरणं स्वाश्रमेष्वानुक्रमणं
स्वधर्म एव सर्वं धत्ते
स्तम्भशाखेवेतराण्यनेनोर्ध्वभाग्भवत्यन्यथधः पतत्येष
स्वधर्माभिभूतो यो वेदेषु न स्वधर्मातिक्रमेणाश्रमी
भवत्याश्रमेष्वेवावस्थितस्तपस्वी चेत्युच्यत एतदप्युक्तं
नातपस्कस्यात्मध्यानेऽधिगमः कर्मशुद्धिर्वेत्येवं ह्याह ॥

तपसा प्राप्यते सत्त्वं सत्त्वात्सम्प्राप्यते मनः ।
मनसा प्राप्यते त्वात्मा ह्यात्मापत्त्या निवर्तत इति ॥ ३॥

अत्रैते श्लोका भवन्ति ॥

यथा निरिन्धनो वह्निः स्वयोनावुपशाम्यति ।
तथा वृत्तिक्षयाच्चित्तं स्वयोनावुपशाम्यति ॥ १॥

स्वयोनावुपशान्तस्य मनसः सत्यगामिनः ।
इन्द्रियार्थाविमूढस्यानृताः कर्मवशानुगाः ॥ २॥

चित्तमेव हि संसारस्तत्प्रयत्नेन शोधयेत् ।
यच्चित्तस्तन्मयो भवति गुह्यमेतत्सनातनम् ॥ ३॥

चित्तस्य हि प्रसादेन हन्ति कर्म शुभाशुभम् ।
प्रसन्नात्मात्मनि स्थित्वा सुखमव्ययमश्नुते॥ ४॥

समासक्तं यदा चित्तं जन्तोर्विषयगोचरे ।
यद्येवं ब्रह्मणि स्यात्तत्को न मुच्येत बन्धनात् ॥ ५॥

मनो हि द्विविधं प्रोक्तं शुद्धं चाशुद्धमेव च ।
अशुद्धं कामसङ्कल्पं शुद्धं कामविवर्जितम् ॥ ६॥

लयविक्षेपरहितं मनः कृत्वा सुनिश्चलम् ।
यदा यात्यमनीभावं तदा तत्परमं पदम् ॥ ७॥

तावदेव निरोद्धव्यं हृदि यावत्क्षयं गतम् ।
एतज्ज्ञानं च मोक्षं च शेषास्तु ग्रन्थविस्तराः ॥ ८॥

समाधिनिर्धूतमलस्य चेतसो
निवेशितस्यात्मनि यत्सुखं लभेत् ।
न शक्यते वर्णयितुं गिरा तदा
स्वयं तदन्तःकरणेन गृह्यते ॥ ९॥

अपामपोऽग्निरग्नौ वा व्योम्नि व्योम न लक्षयेत् ।
एवमन्तर्गतं चित्तं पुरुषः प्रतिमुच्यते ॥ १०॥

मन एव मनुष्याणां कारणं बन्धमोक्षयोः ।
बन्धाय विषयासक्तं मुक्त्यै निर्विषयं स्मृतमिति ॥ ११॥

अथ यथेयं कौत्सायनिस्तुतिः ॥

त्वं ब्रह्मा त्वं च वै विष्णुस्त्वं रुद्रस्त्वं प्रजापतिः ।
त्वमग्निर्वरुणो वायुस्त्वमिन्द्रस्त्वं निशाकरः ॥ १२॥

त्वं मनुस्त्वं यमश्च त्वं पृथिवी त्वमथाच्युतः ।
स्वार्थे स्वाभाविकेऽर्थे च बहुधा तिष्ठसे दिवि ॥ १३॥

विश्वेश्वर नमस्तुभ्यं विश्वात्मा विश्वकर्मकृत् ।
विश्वभुग्विश्वमायस्त्वं विश्वक्रीडारतिः प्रभुः ॥ १४॥

नमः शान्तात्मने तुभ्यं नमो गुह्यतमाय च ।
अचिन्त्यायाप्रमेयाय अनादिनिधनाय चेति ॥ १५॥ ॥ ४॥

तमो वा इदमेकमास तत्पश्चात्परेणेरितं विषयत्वं
प्रयात्येतद्वै रजसो रूपं तद्रजः खल्वीरितं विषमत्वं
प्रयात्येतद्वै तमसो रूपं तत्तमः खल्वीरितं तमसः
सम्प्रास्रवत्येतद्वै सत्त्वस्य रूपं तत्सत्त्वमेवेरितं
तत्सत्त्वात्सम्प्रास्रवत्सोंऽशोऽयं यश्चेतनमात्रः
प्रतिपुरुषं क्षेत्रज्ञः सङ्कल्पाध्यवसायाभिमानलिङ्गः
प्रजापतिस्तस्य प्रोक्ता अग्र्यास्तनवो ब्रह्मा रुद्रो विष्णुरित्यथ
यो ह खलु वावास्य राजसोंऽशोऽसौ स योऽयं ब्रह्माथ यो ह
खलु वावास्य तामसोंऽशोऽसौ स योऽयं रुद्रोऽथ यो ह
खलु वावास्य सात्विकोंऽशोऽसौ स एवं विष्णुः स वा एष
एकस्त्रिधाभूतोऽष्टधैकादशधा द्वादशधापरिमितधा
चोद्भूत उद्भूतत्वाद्भूतेषु चरति प्रतिष्ठा
सर्वभूतानामधिपतिर्बभूवेत्यसावात्मान्तर्बहिश्चान्तर्बहिस्
ह्च ॥ ५॥ चतुर्थः प्रपाठकः ॥

द्विधा वा एष आत्मानं बिभर्त्ययं यः प्राणो
यश्चासावादित्योऽथ द्वौ वा एतावास्तां पञ्चधा
नामान्तर्बहिश्चाहोरात्रे तौ व्यावर्तेते असौ वा आदित्यो
बहिरात्मान्तरात्मा प्राणो बहिरात्मा गत्यान्तरात्मनानुमीयते
। गतिरित्येवं ह्याह यः
कश्चिद्विद्वानपहतपाप्माध्यक्षोऽवदातमनास्तन्निष्ठ
आवृत्तचक्षुः सोऽन्तरात्मागत्या बहिरात्मनोऽनुमीयते
गतिरित्येवं ह्याहाथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो

यः पश्यति मां हिरण्यवत्स एषोऽन्तरे हृत्पुष्कर
एवाश्रितोऽन्नमत्ति ॥ १॥

अथ य एषोऽन्तरे हृत्पुष्कर एवाश्रितोऽन्नमत्ति स
एषोऽग्निर्दिवि श्रितः सौरः कालाख्योऽदृश्यः
सर्वभूतान्नमत्ति कः पुष्करः किमयं वेद वा व
तत्पुष्करं योऽयमाकाशोऽस्येमाश्चतस्रो दिशश्चतस्र
उपदिशः संस्था अयमर्वागग्निः परत एतौ
प्राणादित्यावेतावुपासीतोमित्यक्षरेण व्याहृतिभिः सावित्र्या
चेति ॥ २॥

द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तं चाथ यन्मूर्तं
तदसत्यं यदमूर्तं तत्सत्यं तद्ब्रह्म यद्ब्रह्म
तज्ज्योतिर्यज्ज्योतिः स आदित्यः स वा एष ओमित्येतदात्मा स
त्रेधात्मानं व्यकुरुत ओमिति तिस्रो मात्रा एताभिः सर्वमिदमोतं
प्रोतं चैवास्मिन्नित्येवं ह्याहैतद्वा आदित्य ओमित्येवं
ध्यायंस्तथात्मानं युञ्जीतेति ॥ ३॥

अथान्यत्राप्युक्तमथ खलु य उद्गीथः स प्रणवो यः प्रणवः
स उद्गीथ इत्यसावादित्य उद्गीथ एव प्रणव इत्येवं
ह्याहोद्गीथः प्रणवाख्यं प्रणेतारं नामरूपं विगतनिद्रं
विजरमविमृत्युं पुनः पञ्चधा ज्ञेयं निहितं
गुहायामित्येवं ह्याहोर्ध्वमूलं वा आब्रह्मशाखा
आकाशवाय्वग्न्युदकभूम्यादय एकेनात्तमेतद्ब्रह्म
तत्तस्यैतत्ते यदसावादित्य ओमित्येतदक्षरस्य
चैतत्तस्मादोमित्यनेनैतदुपासीताजस्रमित्येकोऽस्य रसं
बोधयीत इत्येवं ह्याहैतदेवाक्षरं पुण्यमेतदेवाक्षरं
ज्ज्ञात्वा यो यदिच्छति तस्य तत् ॥ ४॥

अथान्यत्राप्युक्तं स्तनयत्येपास्य तनूर्या ओमिति
स्त्रीपुंनपुंसकमिति लिङ्गवत्येषाथाग्निर्वायुरादित्य इति
भास्वत्येषाथ रुद्रो विष्णुरित्यधिपतिरित्येषाथ गार्हपत्यो
दक्षणाग्निराहवनीय इति मुखवत्येषाथ ऋग्यजुःसामेति
विजानात्येषथ भूर्भुवस्वरिति लोकवत्येषाथ भूतं
भव्यं भविष्यदिति कालवत्येषाथ प्राणोऽग्निः सूर्यः इति
प्रतापवत्येषाथान्नमापश्चन्द्रमा इत्याप्यायनवत्येषाथ
बुद्धिर्मनोऽहङ्कार इति चेतनवत्येषाथ प्राणोऽपानो व्यान
इति प्राणवत्येके त्यजामीत्युक्तैताह प्रस्तोतार्पिता

भवतीत्येवं ह्याहैतद्वै सत्यकाम परं चापरं च
यदोमित्येतदक्षरमिति ॥ ५॥

अथ व्यात्तं वा इदमासीत्सत्यं प्रजापतिस्तपस्तप्त्वा
अनुव्याहरद्भूर्भुवःस्वरित्येषा हाथ प्रजापतेः स्थविष्ठा
तनूर्वा लोकवतीति स्वरित्यस्याः शिरो नाभिर्भुवो भूः पादा
आदित्यश्चक्षुरायत्तः पुरुषस्य महतो मात्राश्चक्षुषा
ह्ययं मात्राश्चरिति सत्यं वै चक्षुरक्षिण्युपस्थितो हि
पुरुषः सर्वार्थेषु
वदत्येतस्माद्भूर्भुवःस्वरित्युपासीतान्नं हि
प्रजापतिर्विश्वात्मा विश्वचक्षुरिवोपासितो भवतीत्येवं
ह्याहैषा वै प्रजापतिर्विश्वभृत्तनूरेतस्यामिदं
सर्वमन्तर्हितमस्मिँश्च सर्वस्मिन्नेषान्तर्हितेति
तस्मादेषोपासीतेति ॥ ६॥

तत्सवितुर्वरेण्यमित्यसौ वा आदित्यः सविता स वा एवं
प्रवरणाय आत्मकामेनेत्याहुर्ब्रह्मवादिनोऽथ भर्गो देवस्य
धीमहीति सविता वै तेऽवस्थिता योऽस्य भर्गः कं
सञ्चितयामीत्याहुर्ब्रह्मवादिनोऽथ धियो यो नः प्रचोदयादिति
बुद्धयो वै धियस्ता योऽस्माकं
प्रचोदयादित्याहुर्ब्रह्मवादिनोऽथ भर्ग इति यो ह वा
अस्मिन्नादित्ये निहितस्तारकेऽक्षिणि चैष भर्गाख्यो
भाभिर्गतिरस्य हीति भर्गो भर्जति वैष भर्ग इति
ब्रह्मवादिनोऽथ भर्ग इति भासयतीमाँल्लोकानिति
रञ्जयतीमानि भूतानि गच्छत इति
गच्छत्यस्मिन्नागच्छत्यस्मा इमाः
प्रजास्तस्माद्भारकत्वाद्भर्गः शत्रून्सूयमानत्वात्सूर्यः
सव्नात्सविता दानादादित्यः
पवनात्पावमानोऽथायोऽथायनादादित्य इत्येवं ह्याह
खल्वात्मनात्मामृताख्यश्चेता मन्ता गन्ता स्रष्टा
नन्दयिता कर्ता वक्ता रसयिता घ्राता स्पर्शयिता च
विभुविग्रहे सन्निष्ठा इत्येवं ह्याहाथ यत्र द्वैतीभूतं
विज्ञानं तत्र हि शृणोति पश्यति जिघ्रतीति रसयते चैव
स्पर्शयति सर्वमात्मा जानीतेति यत्राद्वैतीभूतं विज्ञानं
कार्यकारणनिर्मुक्तं निर्वचनमनौपम्यं निरुपाख्यं किं
तदङ्ग वाच्यम् ॥ ७॥

एष हि खल्वात्मेशानः शंभुर्भवो रुद्रः

प्रजापतिर्विश्वसृड्ढिरण्यगर्भः सत्यं प्राणो हंसः शान्तो
विष्णुर्नारायणोऽर्कः सविता धाता सम्राडिन्द्र इन्दुरिति य
एष तपत्यग्निना पिहितः सहस्राक्षेण हिरण्मयेनानन्देनैष
वाव विजिज्ञासितव्योऽन्वेष्टव्यः सर्वभूतेभ्योऽभयं
दत्त्वारण्यं गत्वाथ
बहिःकृतेन्द्रियार्थान्स्वशरीरादुपलभतेऽथैनमिति
विश्वरूपं हरिणं जातवेदसं परायणं ज्योतिरेकं
तपन्तम् । सहस्ररश्मिः शतधा वर्तमानः प्राणः
प्रजानामुदयत्येष सूर्यः ॥ ८॥ इति पञ्चमः प्रपाठकः ॥

। अथ प्रपाठक ६ ।
द्विधा वा एष आत्मानं बिभर्त्ययं यः प्राणो
यश्चासा आदित्योऽथ द्वौ वा एता अस्य पन्थाना
अन्तर्बहिश्चाहोरात्रेणैतौ व्यावर्तेते  असौ वा आदित्यो
बहिरात्मान्तरात्मा प्राणोऽतो बहिरात्मक्या
गत्यान्तरात्मनोऽनुमीयते गतिरित्येवं हि आहाथ यः
कश्चिद्विद्वानपहतपाप्माऽक्षाध्यक्षोऽवदातमनास्तन्निष्ठ
आवृत्तचक्षुः सो अन्तरात्मक्या गत्या बहिरात्मनोऽनुमीयते
गतिरित्येवं ह आह  अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो यः
पश्यतीमां हिरण्यवस्थात् स एषोऽन्तरे हृत्पुष्कर
एवाश्रितोऽन्नमत्ति ॥ १॥

अथ य एषोऽन्तरे हृत्पुष्कर एवाश्रितोऽन्नमत्ति स एषोऽग्निर्दिवि
श्रितः सौरः कालाख्योऽदृश्यः सर्वभूतान्यन्नमत्तीति  कः
पुष्करः
किंमयो वेति  इअदं वा व तत्पुष्करं योऽयमाकाशोऽस्येमाः
चतस्रो दिशश्चतस्र उपदिशो दलसंस्था आसमर्वाग्विचरत एतौ
प्राणादित्या एता उपासितोमित्येतदक्षरेण व्याहृतिभिः
सावित्र्या चेति ॥ २॥

द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तं च । अथ यन्मूर्तं
तदसत्यम्  यदमूर्तं तत्सत्यम् तद्ब्रह्म तज्ज्योतिः यज्ज्योतिः स
आदित्यः स वा एष ओमित्येतदात्माभवत्  स त्रेधात्मानं व्याकुरुत
ओमिति  तिस्रो मात्रा  एताभिः सर्वमिदमोतं प्रोतं चैवास्मीति  एवं
ह्याहैतद्वा आदित्य ओमित्येवं ध्यायत आत्मानं युञ्जीतेति ॥ ३॥

अथान्यत्रापि उक्तमथ खलु य उद्गीथः स प्रणवो यः प्रणवः
स उद्गीथ इति  असौ वा आदित्य उद्गीथ एष प्रणवा इति । एवं
ह्याहोद्गीथं प्रणवाख्यं प्रणेतारं भारूपं
विगतनिद्रं विजरं विमृत्युं
त्रिपदं त्र्यक्षरं पुनः पञ्चधा ज्ञेयं निहितं गुहायामित्येवं
ह्याहोर्ध्वमूलं त्रिपाद्ब्रह्म शाखा आकाश वाय्वग्न्युदकभूम्यादय
एकोऽश्वत्थनामैतद्ब्रह्मैतस्यैतत्तेजो यदसा आदित्यः ओमित्येतदक्षरस्य
चैतत्तस्मादोमित्यनेनैतदुपासीताजस्रमित्येकोऽस्य सम्बोधयितेत्येवं
ह्याह   :
एतदेवाक्षरं पुण्यमेतदेवाक्षरं परम् ।
एतदेवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत् ॥        ॥ ४॥

अथान्यत्राप्युक्तं   स्वनवत्येषास्यस्तनुर्या ओमिति स्त्रीपुंनपुंसकेति
लिङ्गवती  एषाऽथाग्निर्वायुरादित्य इति भास्वति  एषा अथ ब्रह्म
रुद्रो
विष्णुरित्यधिपतिवती  एषाऽथ गार्हपत्यो दक्षिणाग्निराहवनीया इति
मुखवती  एषाऽथ ऋग्यजुःसामेति विज्ञानवती  एषा
भूर्भुवःस्वरिति
लोकवती  एषाऽथ भूतं भव्यं भविष्यदिति कालवती  एषाऽथ
प्राणोऽग्निः
सूर्य इति प्रतापवती  एषाऽथान्नमापश्चन्द्रमा इत्याप्यायनवती
एषाऽथ बुद्धिर्मनोऽहङ्कारा इति चेतनवती  एषाऽथ प्राणोऽपानो
व्यान
इति प्राणवती  एषेति अत ओमित्युक्तेनैताः प्रस्तुता अर्चिता अर्पिता
भवन्तीति एवं ह्याहैतद्वै सत्यकाम परां चापरां
च ब्रह्म यदोमित्येतदक्षरमिति ॥ ५॥

अथाव्याहृतं वा इदमासीत्  स सत्यं
प्रजापतिस्तपस्तप्त्वाऽनुव्याहरद्भूर्भुवःस्वरिति ।
एषैवास्य प्रजापतेः स्थविष्ठा तनुर्या लोकवतीति
स्वरित्यस्याः शिरो नाभिर्भुवो
भूः पादा आदित्यश्चक्षुः  चक्षुरायता हि पुरुषस्य
महती मात्रा  चक्षुषा
ह्ययं मात्राश्चरति  सत्यं वै चक्षुः
अक्षिण्यवस्थितो हि पुरुषः सर्वार्थेषु चरति
एतस्माद्भूर्भुवःस्वरित्युपासीतानेन हि
प्रजापतिर्विश्वात्मा विश्वचक्षुरिवोपासितो भवतीति एवं ह्याहैषा
वै प्रजापतेर्विश्वभृत्तनुरेतस्यामिदं सर्वमन्तर्हितमस्मिन्

च सर्वस्मिन्नेषा अन्तर्हितेति तस्मादेषोपासीता ॥ ६॥

तत्सवितुर्वरेण्यमित्यसौ वा आदित्यः सविता स वा एवं प्रवरणीय
आत्मकामेनेत्याहुर्ब्रह्मवादिनोऽथ भर्गो देवस्य धीमहीति
सविता वै देवस्ततो योऽस्य भर्गाख्यस्तं
चिन्तयामीत्याहुर्ब्रह्मवादिनोऽथ
धियो यो नः प्रचोदयादिति  बुद्धयो वै धियस्तायोऽस्माकं
प्रचोदयादित्याहुर्ब्रह्मवादिनः  अथ भर्गा इति यो ह वा अमुष्मिन्नादित्ये
निहितस्तारकोऽक्षिणि वैष भर्गाख्यः  भाभिर्गतिरस्य हीति भर्गः
भर्जयतीति
वैष भर्ग इति रुद्रो ब्रह्मवादिनोऽथ  भ इति भासयतीमान् लोकान्  र
इति
रंजयतीमानि भूतानि  ग इति गच्छन्त्यस्मिन्नागच्छन्त्यस्मादिमाः
प्रजास्तस्माद्भ-रग-त्वाद्भर्गः  शाश्वत् सूयमानात् सूर्यः सवनात्
सविताऽदानात् आदित्यः पवनात्पावनोऽथापोप्यायनादित्येवं ह्याह
खल्वात्मनोऽत्मा नेतामृताख्यश्चेता मन्ता गन्तोत्सृष्टानन्दयिता
कर्ता वक्ता रसयिता घ्राता द्रष्टा श्रोता स्पृशति च विभुर्विग्रहे
सन्निविष्टा इत्येवं ह्याह  अथ यत्र द्वैतीभूतं विज्ञानं तत्र हि
शृणोति
पश्यति जिघ्रति रसयति चैव स्पर्शयति सर्वमात्मा जानीतेति
यत्राद्वैतीभूतं
विज्ञानं कार्यकारणकर्मनिर्मुक्तं निर्वचनमनौपम्यं निरुपाख्यां
किं  तदवाच्यम् ॥ ७॥

एष हि खल्वात्मेशानः शम्भुर्भवो रुद्रः प्रजापतिर्विश्वसृक्
हिरण्यगर्भः सत्यं प्राणो हंसः शास्ता विष्णुर्नारायणोऽर्कः
सविता धाता विधाता सम्राडिन्द्र इन्दुरिति  य एष तपत्यग्निरिवाग्निना
पिहितः सहस्राक्षेण हिरण्मयेनाण्डेन  एष वा जिज्ञासितव्योऽन्वेष्टव्यः
सर्वभूतेभ्योऽभयं दत्वारण्यं गत्वाथ
बहिःकृत्वीन्द्रियार्थान्स्वाच्छरीरादुपलभेत एनमिति ।
विश्वरूपं हरिणं जातवेदसं परायणं ज्योतिरेकं तपन्तम् ।
सहस्ररश्मिः शतधा वर्तमानः प्राणः प्रजानामुदयत्येष सूर्यः ॥

॥ ८॥

तस्माद्वा एष उभयात्मैवं विदात्मन्येवाभिद्यायत्यात्मन्येव
यजतीति ध्यानं प्रयोगस्थं मनो विद्वद्भिष्टुतं
मनःपूतिमुच्छिष्टोपहतमित्यनेन तत्पावयेत्  मन्त्रं पठति

उच्छिष्टोच्छिष्टोपहितं यच्च पापेन दत्तं मृतसूतकाद्वा
वसोः पवित्रमग्निः सवितुश्च रश्मयः पुनन्त्वन्नं मम दुष्कृतं
च यदन्यत् अद्भिः पुरस्तात्परिदधाति प्राणाय स्वाहापानाय
स्वाहा व्यानाय स्वाहा समानाय स्वाहोदानाय स्वाहेति
पञ्चभिरभिजुहोति
अथावाशिष्टं यतवागश्नात्यतोऽद्भिर्भूय
एवोपरिष्टात्परिदधात्याचान्तो
भूत्वात्मेज्यानः प्राणोऽग्निर्विश्वोऽसीति च
द्वाभ्यामात्मानमभिध्यायेत्
प्राणोऽग्निः परमात्मा वै पञ्चवायुः समाश्रितः स प्रीतः प्रीणातु
विश्वं
विश्वभुक् विश्वोऽसि वैश्वानरोऽसि विश्वं त्वया
धार्यते जायमानम् विशन् तु त्वामाहुतयश्च
सर्वाः प्रजास्तत्र यत्र विश्वामृतोऽसीति एवं न विधिना
खल्वनेनात्तानत्वं पुनरुपैति ॥ ९॥

अथापरं वेदितव्यमुत्तरो विकारोऽस्यात्मयज्ञस्य यथान्नमन्नादश्चेति

अस्योपव्याख्यानं पुरुषश्चेता प्रधानान्तःस्थः स एव भोक्ता
प्राकृतमन्नं भुङ्क्त इति तस्यायं भूतात्मा ह्यन्नमस्यकर्ता
प्रधानः
तस्मात्त्रिगुणं भोज्यं भोक्ता पुरुषोऽन्तस्थः अत्र दृष्टं नाम
प्रत्ययम्
यस्माद्बीजसम्भवा हि पशवस्तस्माद्बीजं भोज्यमनेनैव प्रधानस्य
भोज्यत्वं
व्याख्यातं तस्माद्भोक्ता पुरुषो भोज्या प्रकृतिस्तत्स्थो भुङ्क्त इति
प्राकृतमन्नं
त्रिगुणभेदपरिणमत्वान्महदाद्यं विशेषान्तं लिङ्गमनेनैव
चतुर्दशविधस्य
मार्गस्य व्याख्या कृता भवति सुखदुःखमोहसंज्ञं
ह्यन्नभूतमिदं जगत्
न हि बीजस्य स्वादुपरिग्रहोऽस्तीति यावन्नप्रसूतिः तस्याप्येवं
तिसृष्ववस्थास्वन्नत्वं
भवति कौमारं यौवनं जरा परिणमत्वातत्दन्नत्वमेवं प्रधानस्य
व्यक्ततां
गतस्योपलब्धिर्भवति तत्र बुद्ध्यादीनि स्वादुनि
भवन्त्यध्यवसायसङ्कल्पाभिमाना इति
अथेन्द्रियार्थान् पञ्चस्वादुनि भवन्ति एवं सर्वाणीन्द्रियकर्माणि

प्राणकर्माणि
एवं व्यक्तमन्नमव्यक्तमन्नम् अस्य निर्गुणो भोक्ता
भोक्तृत्वाच्चैतन्यं
प्रसिद्धं तस्य यथाग्निर्वै देवानामन्नदः
सोमोऽन्नमग्निनैवान्नमित्येवंवित्
सोमसंज्ञोऽयंभूतत्माऽग्निसंज्ञोऽप्यव्यक्तमुखा इति वचनात्पुरुषो
ह्यव्यक्तमुखेन त्रिगुणं भुङ्क्त इति यो हैवं वेद संन्यासी योगी
चात्मयाजी चेति अथ यद्वन्न कश्चिच्छून्यागारे कामिन्यः
प्रविष्टाः स्पृशतीन्द्रियार्थान् तद्वद् यो न स्पृशति
प्रविष्टान् संन्यासी योगी चात्मयाजी चेति ॥ १०॥

परं वा एतदात्मनो रूपं यदन्नमन्नमयो ह्ययं प्राणोऽथ न
यद्यश्नात्यमन्ताऽश्रोताऽस्प्रष्टाऽद्रष्टाऽवक्ताऽघ्रातारसयिता
भवति प्राणांश्चोत्सृजतीति एवं ह्याहाथ यदि खल्वश्नाति
प्राणसमृद्धो
भूत्वा मन्ता भवति श्रोता भवति
स्प्रष्टा भवति वक्ता भवति रसयिता
भवति घ्राता भवति द्रष्टा भवतीति एवं ह्याह अन्नाद्वै प्रजाः
प्रजायन्ते
याः कश्चित्पृथिवीशृताः । अतोऽन्नेनैव जीवन्ति अथैतदपि यन्ति
अन्ततः ॥ ११॥

अथान्यत्रापि उक्तम् सर्वाणि ह वा इमानि भूतान्यहरहः
प्रपतन्त्यन्नमभिजिघृक्षमाणानि सूर्यो रश्मिभिराददात्यन्नं
तेनासौ तपत्यन्नेनाभिषिक्ताः पचन्तीमे प्राणा अग्निर्वा
अन्नेनोज्ज्वलत्यन्नकामेनेदं प्रकल्पितं ब्रह्मणा
अतोऽन्नमात्मेत्युपासीतेत्वेयं
ह्याह । अनाद्भूतानि जायन्ते जातान्यन्नेन
वर्धन्ते अद्यतेऽत्ति च भूतानि
तस्मादन्नं तदुच्यते ॥ १२॥

अथान्यत्रापि उक्तम् : विश्वभृद्वै नामैषा तनुर्भगवतो
विष्णोर्यदिदमन्नं प्राणो वा अन्नस्य रसो मनः प्राणस्य
विज्ञानं मनस आनन्दं विज्ञानस्येति अन्नवान् प्राणवान्
मनश्वान् विज्ञानवान् आनन्दवान् च भवति यो हैवं वेद
यावान्तीह वै भूतान्यन्नमदन्ति तावत्स्वन्तस्थोऽन्नमत्ति यो हैवंवेद
।
अन्नमेव विजरन्नमन्नं संवननं स्मृतम् । अन्नं पशूनां

प्राणोऽन्नं ज्येष्ठमन्नं भिषक् स्मृतम् ॥ १३॥

अथान्यात्रप्युक्तम् : अन्नं वा अस्य सर्वस्य योनिः  कालश्चान्नस्य
सूर्यो योनिः कालस्य  तस्यैतद्रूपं यन् निमेषादिकालात्सम्भृतं
द्वादशात्मकं वत्सरमेतस्याग्नेयमर्धमर्धं वारुणं  मघाद्यं
श्रविष्ठार्धमाग्नेयं क्रमेणोत्क्रमेण सार्पाद्यं श्रविष्ठार्धान्तं
सौम्यम्  तत्रैकैकमात्मनो नवांशकं सचारकविधम्
सौक्ष्म्यत्वादेतत्प्रमाणमनेनैव प्रमीयते हि कालः  न विना प्रमाणेन
प्रमेयस्योपलब्धिः  प्रमेयोऽपि प्रमाणतां
पृथक्त्वादुपैत्यात्मसम्बोधनार्थमित्येवं
ह्याह । यावत्यो वै कालस्य कलास्तावतीषु चरत्यसौ  यः कालं
ब्रह्मेत्युपासीत
कालस्तस्यातिदूरमपसरतीति  एवं ह्याह   :

कालात्स्रवन्ति भूतानि  कालाद्वृद्धिं प्रयान्ति च ।
काले चास्तं नियच्छन्ति कालो मूर्तिरमूर्तिमान् ॥         ॥ १४॥

द्वे वाव ब्रह्मणो रुपे कालश्चाकालश्चाथ यः
प्रागादित्यात्सोऽकालोऽकालोऽथ
य आदित्यद्यः स कालः  सकलः  सकलस्य वा एतद्रूपं यत्संवत्सरः
संवत्सरात्खल्वेवेमाः प्रजाः प्रजायन्ते  संवत्सरेणेह वै जाता
विवर्धन्ते
संवत्सरे प्रत्यस्तं यन्ति  तस्मात्संवत्सरो वै प्रजापतिः कालोऽन्नं
ब्रह्मनीडमात्मा
चेत्येवं ह्याह

कालः पचति भूतानि सर्वाण्येव महात्मनि ।
यस्मिन् तु पच्यते कालो यस्तं वेद स वेदवित् ॥     ॥ १५॥

विग्रहवानेष कालः सिन्धुराजः प्रजानाम्  एष तत्स्थः सविताख्यो
यस्मादेवेमे चन्द्रर्क्षग्रह संवत्सरादयः सूयन्ते  अथैभ्यः
सर्वमिदमत्र वा यत्किञ्चित्शुभाशुभं दृश्यन्तेह लोके
तदेतेभ्यस्तस्मादादित्यात्मा ब्रह्माथ कालसंज्ञमादित्यमुपासीतादित्यो
ब्रह्मेत्येकेऽथ एवं ह्याह ।

होता भोक्ता हविर्मन्त्रो यज्ञो विष्णुः प्रजापतिः ।
सर्वः कश्चित्प्रभुः साक्षी योऽमुष्मिन्भाति मण्डले ॥     ॥ १६॥

ब्रह्म ह वा इदमग्र आसीत्  एकोऽनन्तः  प्रागनन्तो दक्षिणोऽनन्तः
प्रतीच्यनन्त उदीच्यनन्त ऊर्ध्वान्  चाऽवान् च सर्वतोऽनन्तः
न ह्यास्य प्राच्यादि दिशः कल्पन्तेऽथ तिर्यग्वान् चोर्ध्वं वा

अनूह्य एष परमात्माऽपरिमितोऽतर्क्योऽचिन्त्य एष आकाशात्मा एवैष कृत्स्नक्षय एको जागर्तीति एतस्मादाकाशादेष खल्विदं चेतामात्रं बोधयति अनेनैव चेदम् ध्यायते अस्मिन् च प्रत्यस्तं याति अस्यैतद्भास्वरं रूपं यदमुष्मिन्नादित्ये तपति अग्नौ चाधुमके
यज्ज्योतिश्चित्रतरमुदरस्तोऽथ वा यः पचत्यन्नम् इत्येवं ह्याह यश्चैषोऽग्नौ
यश्चायं हृदये यश्चासावादित्ये स एष एका इत्येकस्य हैकत्वमेति य एवं वेद ॥ १७॥

तथा तत्प्रयोगकल्पः प्राणायामः प्रत्याहारो ध्यानं धारणा तर्कः समाधिः षडङ्गा इत्युच्यते योगः अनेन यदा पश्यन्पश्यति रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् तदा विद्वान्पुण्यपापे विहाय परेऽव्यये सर्वमेकीकरोति एवं ह्याह :

यथा पर्वतमादीप्तं नाश्रयन्ति मृगद्विजाः ।
तद्वद्ब्रह्मविदो दोषा नाश्रयन्ति कदाचन ॥

॥ १८॥

अथान्यत्राप्युक्तम् : यदा वै बहिर्विद्वान्मनो नियम्येन्द्रियार्थान् च प्राणो निवेशयित्वा निःसङ्कल्पस्ततस्तिष्ठेत् अप्राणादिह यस्मात्सम्भूतः प्राणसंज्ञको जीवस्तस्मात्प्राणो वै तुर्याख्ये धारयेत्प्राणम् इत्येवं ह्याह :

अचित्तं चित्तमध्यस्तमचिन्त्यं गुह्यमुत्तमम् ।
तत्र चित्तं निधायेत तच्च लिङ्गं निराश्रयम् ॥ ॥ १९॥

अथान्यत्राप्युक्तम् : अतः परास्य धारणा तालुरसनाग्रनिपीडना-द्वाङ्मनःप्राणनिरोधनाद्ब्रह्म तर्केण पश्यति यदात्मनाऽऽत्मान-मणोरणीयांसं द्योतमानं मनःक्षयात्पश्यति तदात्मनात्मानं दृष्ट्वा निरात्मा भवति निरात्मकत्वादसङ्ख्योऽयोनिश्चिन्त्यो मोक्षलक्षणमित्येतत्परं रहस्यम् इत्येवं ह्याह :

चित्तस्य हि प्रसादेन हन्ति कर्म शुभाशुभम् ।
प्रसन्नात्मात्मनि स्थित्वा सुखमव्ययमश्नुता इति ॥ ॥ २०॥

अथान्यत्राप्युक्तम् : ऊर्ध्वगा नाडी सुषुम्नाख्या प्राणसञ्चारिणी
ताल्वन्तर्विच्छिन्ना तया प्राणोङ्कारमनोयुक्तयोर्ध्वमुत्क्रमेत् ताल्वध्याग्रं

परिवर्त्य इन्द्रियाण्यसंयोज्य महिमा महिमानं निरीक्षेता ततो
निरात्वकमेति
निरात्मकत्वान्न सुखदुःखभाग्भवति केवलत्वं लभता इत्येवं
ह्याह :

परः पूर्वं प्रतिष्ठाप्य निगृहीतानिलं ततः ।
तीर्त्वा पारमपारेण पश्चाद्युञ्जीत मूर्ध्वनि ॥ ॥ २१॥

अथान्यत्राप्युक्तम् : द्वे वा व ब्रह्मणी अभिध्येये
शब्दश्चाशब्दश्च
अथ शब्देनैवाशब्दमाविष्क्रियते अथ तत्र ओमिति
शब्दोऽनेनोर्ध्वमुत्क्रान्तोऽशब्दे
निधनमेति अथाहैषा गतिरेतदमृतम् अतत्सायुज्यत्वम्
निर्वृतत्वम् तथा चेति
अथ यथोर्णनाभिस्तन्तुनोर्ध्वमुत्क्रान्तोऽवकाशं लभतीत्येवं वा व
खल्वासावभिध्याता ओमित्यनेनोर्ध्वमुत्क्रान्तः स्वातन्त्र्यं लभते
अन्यथा परे शब्दवादिनः :
श्रवणाङ्गुष्ठयोगेनान्तर्हृदयाकाशशब्दमाकर्णयन्ति सप्तविधेयं
तस्योपमा यथा नद्यः किङ्किणी कांस्यचक्रकभेक विःकृन्दिका
वृष्टिर्निवाते
वदतीति तं पृथग्लक्षणमतीत्य परेऽशब्देऽव्यक्ते ब्रह्मण्यस्तं
गताः तत्र तेऽपृथग्धर्मिणोऽपृथग्विवेक्या यथा सम्पन्ना
मधुत्वं नानारसा इत्येवं ह्याह :

द्वे ब्रह्मणि वेदितव्ये शब्दब्रह्म परां च यत् ।
शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥ ॥ २२॥

अथान्यत्राप्युक्तम् : यः शब्दस्तदोमित्येतदक्षरम्
यदस्याग्रं तच्छान्तमशब्दमभयमशोकमानन्दं तृप्तं
स्थिरमचलममृतमच्युतं ध्रुवं विष्णुसंज्ञितं सर्वापरत्वाय
तदेता उपसीतेत्येवं ह्याह :

योऽसौ परापरो देवा ॐकारो नाम नामतः ।
निःशब्दः शून्यभूतस्तु मूर्ध्नि स्थाने ततोऽभ्यसेत् ॥ ॥ २३॥

अथान्यत्राप्युक्तम् : धनुः शरीरम् ओमित्येतच्छरः
शिखास्य मनः तमोलक्षणं भित्वा तमोऽतमाविष्टमागच्छति
अथाविष्टं भित्वाऽलातचक्रमिव स्फुरन्तमादित्यवर्णमूर्जस्वन्तं
ब्रह्म तमसः पर्यमपश्यद्यदमुष्मिन्नादित्येऽथ सोमेऽग्नौ
विद्युति विभाति अथ खल्वेनं दृष्ट्वाऽमृतत्वं गच्छतीत्येवं
ह्याह :

ध्यानमन्तःपरे तत्त्वे लक्ष्येषु च निधीयते ।
अतोऽविशेषविज्ञानं विशेषमुपगच्छति ॥

मानसे च विलीने तु यत्सुखं चात्मसाक्षिकम् ।
तद्ब्रह्म चामृतं शुक्रं सा गतिर्लोक एव सः ॥ ॥ २४॥

अथान्यत्राप्युक्तम् : निद्रेवान्तर्हितेन्द्रियः शुद्धितमया धिया स्वप्न इव यः पश्यतीन्द्रियबिलेऽविवशः प्रणवाख्यं प्रणेतारं भारूपं विगतनिद्रं विजरं विमृत्युं विशोकं च सोऽपि प्रणवाख्यः प्रणेता भारूपः विगत निद्रः विजरः विमृत्युर्विशोको भवतीत्येवं ह्याह :

एवं प्राणमथोङ्कारं यस्मात्सर्वमनेकधा ।
युनक्ति युञ्जते वापि यस्माद्योग इति स्मृतः ॥

एकत्वं प्राणमनसोरिन्द्रियाणां तथैव च ।
सर्वभावपरित्यागो योग इत्यभिधीयते ॥ ॥ २५॥

अथान्यत्राप्युक्तम् : यथा वाप्सु चारिणः शाकुनिकः सूत्रयन्त्रेणोद्धृत्योदरेऽग्नौ जुहोत्येवं वा व खल्विमान्प्राणानोमित्यनेनोद्धृत्यानामयेऽग्नौ जुहोति अतस्तप्तोर्विवसोऽथ यथा तप्तोर्वि सार्पिस्तृणकाष्ठसंस्पर्शेनोज्ज्वलतीत्येवं वा व खल्वसावप्राणाख्यः प्राणसंस्पर्शेनोज्ज्वलति अथ यदुज्ज्वलत्येतद्ब्रह्मणो रूपं चैतद्विष्णोः परमं पदम् चैतद्रुद्रस्य रुद्रत्वमेतत्तदपरिमितधा चात्मानं विभज्य पूरयतीमां लोकानित्येवं ह्याह :

वह्नेश्च यद्वत्खलु विस्फुलिङ्गाः सूर्यान्मयूखाश्च तथैव तस्य
प्राणादयो वै पुनरेव तस्माद् अभ्युच्चरन्तीह यथाक्रमेण ॥

॥ २६॥

अथान्यत्राप्युक्तम्:ब्रह्मणो वा वैतत्तेजः परस्यामृतस्याशरीरस्य यच्छरीरस्यौष्ण्यमस्यैतद्धृतमथाविः सन् नभसि निहितं वैतदेकाग्रेणैवमन्तर्हृदयाकाशं विनुदन्ति यत्तस्य ज्योतिरिव सम्पद्यतीति अतस्तद्भावम् अचिरेणैति भूमावयस्पिण्डं निहितं यथाऽचिरेणैति भूमित्वम् मृद्वत्संस्थमयस्पिण्डं यथाग्न्ययस्कारादयो नाभिभवन्ति प्रणश्यति चित्तं तथाश्रयेण सहैवमित्येवं ह्याह :

हृद्याकाशमयं कोशमानन्दं परमालयम् ।
स्वं योगश्च ततोऽस्माकं तेजश्चैवाग्निसूर्ययोः ॥ ॥ २७॥

अथान्यत्राप्युक्तम् : भूतेन्द्रियार्थानतिक्रम्य ततः प्रव्रज्याज्यं धृतिदण्डं धनुर्गृहीत्वाऽनभिमानमयेन चैवेषुणा तं ब्रह्म द्वारपारं निहत्याद्यं संमोहमौली तृष्णेर्ष्याकुण्डली तन्द्रीराघवेत्र्यभिमानाध्यक्षः क्रोधज्यं प्रलोभदण्डं धनुर्गृहीत्वेच्छामयेन चैवेषुणेमानि खलु भूतानि हन्ति तं हत्वौंकारप्लवेनान्तर्हृदयाकाशस्य पारं तीर्त्वाविर्भूते अन्तराकाशे शनकैरवटैवावटकृद्धातुकामः संविशत्येवं ब्रह्मशालां विशेत् ततश्चतुर्जालं ब्रह्मकोशं प्रणुदेत् गुर्वागमेनेति :
अतः शुद्धः पूतः शून्यः शान्तोऽप्राणो निरात्माऽनन्तोऽक्षय्यः स्थिरः शाश्वतोऽजः स्वतन्त्रः स्वे महिम्नि तिष्ठति अतः स्वे महिम्नि तिष्ठमानम् दृष्ट्वाऽवृत्तचक्रमिव सञ्चारचक्रमालोकयति इत्येवं ह्याह :

षड्भिर्मासैस्तु युक्तस्य नित्यमुक्तस्य देहिनः
अनन्तः परमो गुह्यः सम्यग्योगः प्रवर्तते ॥

रजस्तमोभ्यां विद्धस्य सुसमिद्धस्य देहिनः
पुत्रदारकुटुम्बेषु सक्तस्य न कदाचन ॥ ॥ २८॥

एवमुक्त्वाऽन्तर्हृदयः शकायन्यस्तस्मै नमस्कृत्वाऽनया ब्रह्मविद्यया राजन् ब्रह्मणः पन्थानमारूढाः पुत्राः प्रजापतेरिति सन्तोषं द्वन्द्वतितिक्षां शान्तत्वं योगाभ्यासादवाप्नोतीति
एतद्गुह्यतमं नापुत्राय नाशिष्याय नाशान्ताय कीर्तयेदिति अनन्यभक्ताय सर्वगुणसम्पन्नाय दद्यात् ॥ ॥ २९॥

ॐ शुचौ देशे शुचिः सत्त्वस्थः सदधीयानः सद्वादी सद्ध्यायी सद्याजी स्यादिति । अतः सद्ब्रह्मणि सत्यभिलाषिणि निर्वृत्त्योऽनस्तत्फलच्छिन्नपाशो निराशः परेष्वात्मवद्विगतभयो निष्कामोऽक्षय्यमपरिमितं सुखमाक्रम्य तिष्ठति । परमं वै शेवधेरिव परस्योद्धरणं यन्निष्कामत्वम् । स हि सर्वकाममयः पुरुषोऽध्यवसायसङ्कल्पाभिमानलिङ्गो बद्धः । अतस्तद्विपरीतो मुक्तः । अत्रैक आहुर्गुणः प्रकृतिभेदवशासध्यवसायात्मबन्धमुपागतो। अध्यवसायस्य दोषक्षयाद्धि मोक्षः मनसा ह्येव पश्यति मनसा शृणोति कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा

धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव गुणौघैरुह्यमानः
कलुषीकृतश्चास्थिरश्चलो लुप्यमानः सस्पृहो
व्यग्रश्चाभिमानित्वं
प्रयात इति अहं सो ममेदमित्येवं मन्यमानो निबध्नात्यात्मनात्मानं्
जालेनेव खेचरः । अतः पुरुषोऽध्यावसायसङ्कल्पाबिमानलिङ्गो बद्धः
अतस्तद्विपरीतो मुक्तः तस्मान्निरध्यवसायो निःसङ्कल्पो
निरभिमानस्तिष्ठेत्
एतन्मोक्षलक्षणम् एषात्र ब्रह्मपदवी एषोऽत्र द्वारविवरोऽनेनास्य
तमसः पारं गमिष्यति । अत्र हि सर्वे कामाः समाहिता
इत्यत्रोदाहरन्ति :

यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह ।
बुद्धिश न विचेष्टते तामाहुः परमां गतिम् ॥

एतदुक्त्वान्तर्हृदयः शाकायन्यस्तस्मै नमस्कृत्वा यथावदुपचारी
कृतकृत्यो मरुदुत्तरायणं गतो न ह्यत्रोद्वर्त्मना गतिः एषोऽत्र
ब्रह्मपथः सौरं स्द्वारं भित्त्वोर्द्ध्वेन विनिर्गता इत्यत्रोदाहरन्ति
:

अनन्ता रश्मयस्तस्य दीपवद्यः स्थितो हृदि ।
सितासिताः कद्रुनीलाः कपिला मृदुलोहिताः ॥

ऊर्ध्वमेकः स्थितस्तेषां यो भिभित्वा सूर्यमण्डलम् ।
ब्रह्मलोकमतिक्रम्य तेन यान्ति परां गतिम् ॥

यदस्यान्यद्रश्मिशतमूर्ध्वमेव व्यवस्थितम् ।
तेन देवनिकायानां स्वधामानि प्रपद्यते ॥

ये नैकरूपाश्चाधस्ताद्रश्मयोऽस्य मृदुप्रभाः ।
इह कर्मोपभोगाय तैः संसरति सोऽवषः ।
तस्मात्सर्गस्वर्गापवर्गहेतुर्भगवानसावादित्य इति ॥

॥ ३०॥

किमात्मकानि वा एतानीन्द्रियाणि प्रचरन्त्युद्गन्ता चैतेषामिह
को नियन्ता वेत्याह । प्रत्याहात्मात्मकानीत्यात्मा ह्येषामुद्गन्ता
वाप्सरसो भानवीयाश्च मरीचयो नाम अथ पञ्चभिः
रश्मिभिर्विषयानत्ति कतम आत्मेति योऽयं शुद्धः पूतः
शून्यः शान्तादिलक्षणोक्तः स्वकैर्लिङ्गैरुपगृह्यः
तस्यैतल्लिङ्गमलिङ्गस्याग्नेर्यदौष्ण्यमाविष्टं चापां यः

शिवतमोरस इत्येके । अथ वाक्श्रोत्रं चक्षुर्मनः प्राण इत्येके,
अथ बुद्धिर्धृतिः स्मृतिः प्रज्ञा तदित्येके अथ ते एतस्यैवं
यथैवेह बीजस्याङ्कुरावाथधूमार्चिर्विष्फुलिङ्गा इवाग्नेश्चेति
अत्रोदाहरन्ति :

वह्नेश्च यद्वत्खलु विष्फुलिङ्गाः
सूर्यान्मयूखाश्च तथैव तस्य ।
प्राणादयो वै पुनरेव तस्मा-
दभ्युच्चरन्तीह यथाक्रमेण ॥ ॥ ३१॥

तस्माद्वा एतस्मादात्मनि सर्वे प्राणाः सर्वे लोकाः सर्वे वेदाः
सर्वे देवाः सर्वाणि च भूतान्युच्चरन्ति तस्योपनिषत्सत्यस्य सत्यमिति

अथ यथार्द्रैधाग्नेरभ्याहितस्य पृथग्धूमा निश्चरन्त्येवं वा
एतस्य महतो
भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरसा
इतिहासः
पुराणम् विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि
व्याख्यानान्यस्यैवैतानि विश्वा भूतानि ॥ ३२॥

पञ्चेष्टको वा एषोऽग्निः संवत्सरः तस्येमा इष्टका यो
वसन्तो ग्रीष्मो वर्षाः शरद्धेमन्तः स
शिरःपक्षसीपृच्छपृष्टवान्
एषोऽग्निः पुरुषविदः सेयं प्रजापतेः प्रथमा चितिः
करैर्यजमानमन्तरिक्षमुत्क्षिओस्वा वायवे प्रायच्छत्
प्राणो वै वायुः प्राणोऽग्निस्तस्येमा इष्टका यः प्राणो
व्यानोऽपानः समान उदानः स
शिरःपक्षसीपृष्ठपुच्छवानेषोऽग्निः
पुरुषविदस्तदिदमन्तरिक्षं प्रजापतेर्द्वितीया चितिः करैर्यजमानं
दिवमुत्क्षिप्सेन्द्राय प्रायच्छत् असौ वा आदित्य इन्द्रः सैषोऽग्निः
तस्येमा इष्टका यदृग्यजुः सामाथर्वाङ्गिरसा इतिहासं पुराणं
स शिरःपक्षसीपुच्छपृष्ठवानेषोऽग्निः पुरुषविदः सैषा
द्यौः प्रजापतेस्तृतीया चितिः करैर्यजमानस्यात्मविदेऽवदानं
करोति यथात्मविदुत्क्षिप्य ब्रह्मणे प्रायच्छत्
तत्रानन्दी मोदी भवति ॥ ३३॥

पृथिवीगार्हपत्योऽन्तरिक्षं दक्षिणाग्निर्द्यौराहवनीयः
तत एव पवमानपावकशुचय आविष्कृतमेतेनास्य
यज्ञम् यतः पवमानपावकशुचिसंघातो हि जाठरः

तस्मादग्निर्यष्टव्यः चेतव्यः स्तोतव्योऽभिध्यातव्यः
यजमानो हविर्गृहीत्वा देवताभिध्यानमिच्छति :

हिरण्यवर्णः शकुनो हृद्यादित्ये प्रतिष्ठितः
मद्गुर्हंसस्तेजोवृषः सोऽस्मिन्नग्नौ यजामहे

इति चापि मन्त्रार्थं विचिनोति । तत्सवितुर्वरेण्यं भर्गोऽस्याभिध्येयं यो बुद्ध्यन्तस्थो ध्यायीह मनःशान्तिपदमनुसरत्यात्मन्येव धत्तेऽत्रेमे श्लोका भवन्ति :

१ यथा निरिन्धनो वह्निः स्वयोनावुपशाम्यते
तथा वृत्तिक्षयाच्चित्तं स्वयोनावुपशाम्यते ।
२ स्वयोनावुपशान्तस्य मनसः सत्यकामतः
इन्द्रियार्थविमूढस्यानृताः कर्मवशानुगाः ।
३ चित्तमेव हि संसारम् तत्प्रयत्नेन शोधयेत्
यच्चित्तस्तन्मयो भवति गुह्यमेतत्सनातनम् ।
४ चित्तस्य हि प्रसादेन हन्ति कर्म शुभाशुभम्
प्रसन्नात्मात्मनि स्थित्वा सुखमव्ययमश्नुते ।
५ समासक्तं यथा चित्तं जन्तोर्विषयगोचरे
यद्येवं ब्रह्मणि स्यात्तत्को न मुच्येत बन्धनात् ।
६ मनो हि द्विविधं प्रोक्तं शुद्धं चाशुद्धमेव च
अशुद्धं कामसम्पर्कात् शुद्धं कामविवर्जितम् ।
७ लय विक्षेपरहितं मनः कृत्वा सुनिश्चलम्
यदा यात्यमनीभावं तदा तत्परमं पदम् ।
८ तावन्मनो निरोद्धव्यं हृदि यावत्क्षयं गतम्
एतज्ज्ञानं च मोक्षं च शेषान्ये ग्रन्थविस्तराः ।
९ समाधिनिर्धौतमलस्य चेतसो निवेशितस्यात्मनि यत्सुखं भवेत्
न शक्यते वर्णयितुं गिरा तदा स्वयं तदन्तःकरणेन गृह्यते ।
१० अपामापोऽग्निरग्नौ वा व्योम्नि व्योम न लक्षयेत्
एवमन्तर्गतं यस्य मनः स परिमुच्यते ।
११ मन एव मनुष्याणं कारणं बन्धमोक्षयोः
बन्धाय विषयासंगिं मोक्षो निर्विषयं स्मृतम् ।

अतोऽनग्निहोत्र्यनग्निचिदज्ञानभिध्यायिनां ब्राह्मणः पदव्योमानुस्मरणं विरुद्धम् तस्मादग्निर्यष्टव्यः चेतव्यः स्तोतव्योऽभिध्यातव्यः ॥ ३४॥

नमोऽग्नये पृथिवी क्षिते लोकस्मृते लोकम्स्मै यजमानाय धेहि
नमो वायवेऽन्तरिक्षक्षिते लोकस्मृते लकमस्मै यजमानाय धेहि
नम आदित्याय दिविक्षिते लोकस्मृते लोकमस्मै यजमानाय धेहि
नमो ब्रह्मणे सर्वक्षिते सर्वस्मृते सर्वमस्मै यजमानाय धेहि

हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम्

तत्त्वं पूषन्नपावृणु सत्यधर्माय विष्णवे
योऽसा आदित्ये पुरुषः सोऽसा अहम्  एष ह वै सत्यधर्मो यदादित्यस्य आदित्यत्वं तच्छुक्लम्  पुरुषम्  अलिङ्गम्  नभसोऽन्तर्गतस्य तेजसोंऽशमात्रमेतद्यदादित्यस्य मध्य इवेत्य् अक्षिण्यग्नौ चैतद्ब्रह्मैतदमृतमेतद्भर्गः एतत्सत्यधर्मो नभसोऽन्तर्गतस्य तेजसोंऽशमात्रमेतद्यदादित्यस्य मध्ये अमृतं यस्य हि सोमः प्राणा वा अप्ययंकुरा एतक़्द्ब्रह्मैतदमृतमेतद्भर्गः एतत्सत्यधर्मो नभसोऽन्तर्गतस्य तेजसोऽंशमात्रम्  एतद्यदादित्यस्य मध्ये यजुर्दीप्यत्यौमापोज्योतिरसोऽमृतंब्रह्म भूर्भुवः स्वरोम् ।

अष्टपादं शुचिं हंसं त्रिसूत्रमणुमव्ययम्
द्विधर्मोऽन्धं तेजसेन्धं सर्वं पश्यन्पश्यति

नभसोऽन्तर्गतस्य तेजसोऽन्शमात्रमेतद्यदादित्यस्य मध्ये उदित्वा मयूखे भवत एतत्सवित्सत्यधर्म एतद्यजुरेतत्तप
एतदग्निरेतद्वायुरेतत्प्राण
एतदाप एतच्चन्द्रमा
एतच्छुक्रमेतदमृतमेतद्ब्रह्मविषयमेतद्भानुरर्णवस्तस्मिन्नेव यजमानः सैन्धव इव व्लीयन्त एषा वै ब्रह्मैकतात्र हि सर्वे कामाः समाहिता
इत्यत्रोदाहरन्ति   :
अंशुधारय इवाणुवातेरितः संस्फुरत्यसावन्तर्गः सुराणाम्  यो हैवंवित्स सवित्
स द्वैतवित्  सैकधामेतः स्यात्तदात्मकश्च   :  ये विन्दव इवाभ्युच्चरन्त्यजस्रम्
विद्युदिवाभ्रार्चिषः परमे व्योमन्  तेऽऋचिषो वै यशस आश्रयवासाज्जटाभिरूपा
इव कृष्णवर्त्मनः ॥ ३५॥

द्वे वा व खल्वेते ब्रह्मज्योतिषो रूपके शान्तमेकं समृद्धं चैकम्

अथ यच्छन्तं तस्याधारं खम्  अथ यत्समृद्धमिदं तस्यान्नम्
तस्मान्मन्त्रौषधाज्यामिषपुरोडाशस्थालीपाकादिभिर्यष्टव्यमन्त-र्वेद्यामास्न्यवशिष्टैरन्नपानैश्चास्यमाहवनीयमिति मत्वा तेजसः समृद्ध्यै पुण्यलोकविजित्यर्थायामृतत्वाय चात्रोदाहरन्ति   :
अग्निहोत्रं जुहुयात्स्वर्गकामो यमराज्यमग्निष्टोमेनाभियपति सोमराज्यमुक्थेन  सूर्यराज्यं षोडशीना स्वाराज्यमतिरात्रेण प्राजापत्यमासहस्रसंवत्सरान्तक्रतुनेति   :

वर्त्याधारस्नेहयोगाद्यथा दीपस्य संस्थितिः ।
अन्तर्याण्डोपयोगादिमौ स्थितावात्मशिची तथा ॥

॥ ३६॥

तस्मादोमित्यनेनैतदुपासीतापरिमितं तेजस्तत्त्रेधभिहितमग्नावादित्ये प्राणेऽथैषा नाड्यन्नबहुमित्येषाग्नौ हुतमादित्यं गमयति अतो यो रसोऽस्रवत् स उद्गीथं वर्षति तेनेमे प्राणाः प्राणेभ्यः प्रजा इत्यत्रोदाहरन्ति :

यद्धविरग्नौ हूयते तदादित्यं गमयति तत्सूर्यो रश्मिभिर्वर्षति तेनान्नं भवति अन्नाद्भूतानामुत्पत्तिरित्येवं ह्याह :

अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते ।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥

॥ ३७॥

अग्निहोत्रं जुह्वानो लोभजालं भिनत्ति अतः संमोहं छित्वा न क्रोधान्स्तुन्वानः काममभिध्यायमानस्ततश्चतुर्जालं ब्रह्मकोशं भिन्ददतः परमाकाशमत्र हि सौर सौम्याग्नेयसात्विकानि मण्डलानि भित्त्वा ततः शुद्धः सत्त्वान्तरस्थमचलममृतमच्युतं ध्रुवं विष्णुसंज्ञितम् सर्वापरं धाम सत्यकामसर्वज्ञत्वसंयुक्तम् स्वतन्त्रम् चैतन्यम् स्वे महिम्नि तिष्ठमानं पश्यति अत्रोदाहरन्ति :

रविमध्ये स्थितः सोमः सोममध्ये हुताशनः ।
तेजोमध्ये स्थितं सत्त्वं सत्त्वमध्ये स्थितोऽच्युतः ॥

शरीरप्रादेशाङ्गुष्ठमात्रमणोरप्यन्वयं ध्यात्वातःपरमतां गच्छति अत्र हि सर्वे कामाः समाहिता इति अत्रोदाहरन्ति :
अङ्गुष्ठप्रादेशशरीरमात्रं प्रदीपप्रतापवद्विस्त्रिधा हि तद्ब्रह्माभिष्टूयमानं महो देवो भुवनान्याविवेश ।
ॐ नमो ब्रह्मणे नमः ॥ ॥ ३८॥

इति षष्ठः प्रपाठकः ॥

प्रपाठक ७ ।

अग्निर्गायत्रं त्रिवृद्रथन्तरं वसन्तः प्राणो नक्षत्राणि वसवः पुरस्तादुद्यन्ति तपन्ति वर्षन्ति स्तुवन्ति पुनर्विश्वति अन्तर्विवएणेक्षन्ति अचिन्त्योऽमूर्तो गभीरो

गुणभुग्भयोऽनिर्वृत्तिर्योगीश्वरः
सर्वज्ञो मघोऽप्रमेयोऽनाद्यन्तः श्रीमान् अजो धीमाननिर्देश्यः
सर्वसृक् सर्वस्यात्मा सर्वभुक् सर्वस्येशानः
सर्वस्यान्तरान्तरः ॥ १॥

इन्द्रस्त्रिष्टुप् पञ्चदशो बृहद्ग्रीष्मो व्यानः सोमो रुद्रा दक्षिणत
उद्यन्ति तपन्ति वर्षन्ति स्तुवन्ति पुनर्विशन्ति अन्तर्विवरेण
ईक्षन्ति : अनाद्यन्तोऽपरिमितोऽपरिच्छिन्नोऽपरप्रयोज्यः
स्वतन्त्रोऽलिङ्गोऽमूर्तोऽनन्तशक्तिर्धाता भास्करः ॥ २॥

मरुतो जगती सप्तदशो वैरूपम् वर्षा अपानः शुक्र
आदित्याः पश्चादुद्यन्ति तपन्ति वर्षन्ति स्तुवन्ति पुनर्विशन्ति
अन्तर्विवरेणेक्षन्ति तच्छान्तमशब्दमभयमशोकमानन्दम् तृप्तम्

स्थिरमचलममृतमच्युतम् ध्रुवम् विष्णुसंज्ञितम् सर्वापरं
धाम ॥ ३॥

विश्वे देवा अनुष्टुबेकविंशो वैराजः शरत्समानो वरुणः साध्या
उत्तरत उद्यन्ति तपन्ति वर्षन्ति स्तुवन्ति पुनर्विशन्ति
अन्तर्विवरेणेक्षन्ति अन्तःशुद्धः पूतः शून्यः शान्तोऽप्राणो
निरात्मानन्तः ॥ ४॥

मित्रावरुणौ पङ्क्तिस्त्रिणवत्रयस्त्रिंशो शाक्वररैवते हेमन्त
शिशिरा उदानोऽङ्गिरसश्चन्द्रमा ऊर्ध्वा उद्यन्ति तपन्ति
वर्षन्ति स्तुवन्ति पुनर्विशन्ति अन्तर्विवरेणेक्षन्ति प्रणवाख्यं
प्रणेतारम्
भारूपम् विगतनिद्रम् विजरम् विमृत्युम् विशोकम् ॥ ५॥

शनिराहुकेतुरगरक्षोयक्षनरविहगशरभेभादयोऽधस्तादुद्यन्ति
तपन्ति वर्षन्ति स्तुवन्ति पुनर्विशन्ति अन्तर्विवरेणेक्षन्ति
यः प्राज्ञो विधरणः सर्वान्तरोऽक्षरः शुद्धः पूतः भान्तः
क्षान्तः शान्तः ॥ ६॥

एष हि खल्वात्मन्तर्हृदयेऽणीयानिद्धोऽग्निरिव
विश्वरूपोऽस्यैवान्नमिदं
सर्वमस्मिन्नोता इमाः प्रजाः एष आत्मापहतपाप्मा विजरो
विमृत्युर्विशोकोऽविचिकित्सोऽविपाशः सत्यसङ्कल्पः सत्यकामः
एष परमेश्वरः एष भूताधिपतिः एष भूतपालः एष सेतुः

विधरणः
एष हि खल्वात्मेशानः  शम्भुर्भवओरुद्रः प्रजापतिर्
विश्वसृखिरण्यगर्भः
सत्यं प्राणो हंसः शस्ताच्युतो विष्णुर्नारायणः  यश्चैषोऽग्नौ
यश्चायं
हृदयेवयश्चासावादित्ये स एष एकः  तस्मै ते विश्वरूपाय सत्ये
नभसि हिताय नमः ॥ ७॥

अथेदानीं ज्ञानोपसर्गा राजन्मोहजालस्यैष वै योनिः  यदस्वर्गैः
सह स्वर्गस्यैष वाट्ये पुरस्तादुक्तेऽप्यधः स्तम्बेनाश्लिष्यन्ति
अथ ये चान्ये ह नित्यप्रमुदिता नित्यप्रवसिता  नित्ययाचनका
नित्यं शिल्पोपजीविनोऽथ ये चान्ये ह पुरयाचका अयाज्ययाचकाः
शुद्रशिष्याः  शूद्रश्च शास्त्रविद्वांसोऽथ ये चान्ये ह
चाटजटनटभटप्रव्रजितरङ्गावतारिणो राजकर्मणि पतितादयोऽथये
चान्ये ह यक्षराक्षसभूतगणपिशाचोरगग्रहादीनामर्थं
पुरस्कृत्य शमयाम इत्येवं ब्रुवाणा  अथ ये चान्ये ह वृथा
कषायकुण्डलिनः कापालिनोऽथ ये चान्ये ह वृथा
तर्कदृष्टान्तकुहकेन्द्रजालैर्वैदिकेषु परिस्थातुमिच्छन्ति  तैः सह
न संवस्त्  प्रकाश्यभूता वै ते तस्करा अस्वर्ग्या इत्येवं ह्याह   :

नैरात्म्यवादकुहकैर्मिथ्यादृष्टान्तहेतुभिः ।
भ्राम्यन्लोको न जानाति वेदविद्यान्तरन्तु यत् ॥

॥ ८॥

बृहस्पतिर्वै शुक्रो भूत्वेन्द्रस्याभयायासुरेभ्यः
क्षयायेमामविद्यामसृजत्
तया शिवमशिवमित्युद्दिशन्त्यशिवं शिवमिति
वेदादिशास्त्रहिंसकधर्माभिध्यानमस्त्विवति
वदन्ति  अतो नैनामभिधीयेतान्यथैषा बन्ध्येवैषा रतिमात्रं
फलमस्या वृत्तच्युतस्येव नारम्भणीयेत्येवं ह्याह   :

दूरमेते विपरीते विषूची  अविद्या या च विद्येति ज्ञाता ।
विद्याभीप्सितुं नचिकेतसं मन्ये  न त्वा कामा बहवो लोलुपन्ते ॥

विद्यां चाविद्यां च यस्तद्वेदोभयं सह ।
अविद्यया मृत्युं तीर्त्वा विद्यया अमृतमश्नुते ॥

अविद्यायामन्तरे वेष्ट्यमानाः  स्वयं धीराः पण्डितं मन्यमानाः ।
दन्द्रम्यमानाः परियन्ति मूढा अन्धेनैव

नीयमाना यथान्धाः ॥ ॥ ९॥

देवासुरा ह वै य आत्मकामा ब्रह्मणोऽन्तिकं प्रयाताः तस्मै
नमस्कृत्वोचुः भगवन् वयमात्मकामाः स त्वं नो ब्रूहीति
अतश्चिरं ध्यात्वाऽमन्यतान्यतामानो वै तेऽसुरा
अतोऽन्यतममेतेषामुक्तम्
तदिमे मूढा
उपजीवन्त्यभिष्वङ्गिणस्तर्याभिघातिनोऽनृताभिशंसिनः
सत्यमिवानृतं पश्यन्तीन्द्रजालवदित्यतो यद्वेदेष्वाभिहितं तत्सत्यं
यद्वेदेषूक्तं तद्विद्वांस उपजीवन्ति तस्माद्ब्राह्मणो
नावैदिकमधीयीतायमर्थः
स्यादिति ॥ १०॥

एतद्वा व तत्स्वरूपं नभसः खेऽन्तर्भूतस्य यत्परं
तेजस्तत्त्रेधाभिहितमग्ना आदित्ये प्राण एतद्वा व तत्स्वरूपं
नभसः खेऽन्तर्भूतस्य यदोमित्येतदक्षरमनेनैव तदुद्बुध्न्यति
उदयति उच्छ्वसति अजस्रं ब्रह्मधीयालम्बं वात्रैवैतत्समीरणे
नभसि प्रसाखयैवोत्क्रम्य स्कधात्स्कन्धमनुसर्त्यप्सु प्रक्षेपको
लवणस्येव घृतस्य
चौष्ण्यमिवाभिध्यातुर्विस्तृतिरिवैतदित्यात्रोदाहरन्ति :
अथ कस्मादुच्यते वैद्युतो यस्मादुच्चारितमात्र एव सर्वं शरीरं
विद्योतयति तस्मादोमित्यनेनैतदुपासीतापरिमितं तेजः ।

१ पुरुषश्चक्षुषो योऽयं दक्षिणोऽक्षिण्यवस्थितः ।
इन्द्रोऽयमस्य जायेयं सव्ये चाक्षिण्यवस्थिता ॥

२ समागमस्तयोरेव हृदयान्तर्गते सुषौ ।
तेजस्तल्लोहितस्यात्र पिण्ड एवोभयोस्तयोः ॥

३ हृदयादायाति तावच्चक्षुष्यस्मिन्प्रतिष्ठिता ।
सारणी सा तयोर्नाडी द्वयोरेका द्विधा सती ॥

४ मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् ।
मारुतस्तूरसि चरन्मन्द्रं जनयति स्वरम् ॥

५ खजाग्नियोगाद् हृदि सम्प्रयुक्तमणोर्ह्यणुर्द्विरणुः कण्ठदेशे ।
जिह्वाग्रदेशे त्र्यणुकं च विद्धि विनिर्गतं मातृकमेवमाहुः ॥

६ न पश्यन्मृत्युम् पश्यति न रोगं नोत दुःखताम् ।

सर्वं हि पश्यन्पश्यति सर्वमाप्नोति सर्वशः ॥

७ चाक्षुषः स्वप्नचारी च सुप्तः सुप्तात्परश्च यः ।
भेदाश्चैतेऽस्य चत्वारस्तेभ्यस्तुर्यं महत्तरम् ॥

८ त्रिष्वेकपाच्चरेद्ब्रह्म त्रिपाच्चरति चोत्तरे ।
सत्यानृतोपभोगार्थाः द्वैतीभावो महात्मन इति
द्वैतीभावो महात्मन इति ॥ ॥ ११ ॥

इति सप्तमः प्रपाठकः ॥

ॐ आप्यायन्त्विति शान्तिः ॥

इति मैत्रायण्युपनिषत्समाप्ता ॥